वातश्लेष्मज्वर-लक्षण

**स्तैमित्यं पर्वणां भेदो निद्रा गौरवमेव च ।। १५ ।।**
**शिरोग्रहः प्रतिश्यायः कासः स्वेदाप्रवर्तनम्**
**सन्तापो मध्यवेगश्च वातश्लेष्मज्वराकृतिः ।। १६ ।।**

( सु० उ० ३९।४८-४९ )

शरीर गीले कपड़े से ढँका सा रहना, सन्धियाँ फटने सी पीड़ा, निद्रा, शरीर में भारीपन, शिर की जकड़न, प्रतिश्याय ( नासास्राव ), कास, स्वेद की अधिकता, संताप ( ज्वर ) का वेग मध्यम वातश्लेष्म ज्वर का लक्षण है ॥ १५–१६ ॥

वातश्लेष्मज्वरलक्षणमाह—स्तैमित्यमित्यादि । स्वेदाप्रवर्तनं स्वेदस्य आ समन्तादकारणेन प्रवर्तनं विकृतिविषमसमवायारब्धत्वादिति कार्तिकः । युक्तं चैतत् ; यदाह हारीतः—'शिरोग्रहः स्वेदभवो ज्वरस्य कासश्च लिङ्गं कफवातजस्य'--इति । स्वेदभवः स्वेदोत्पत्तिः । मध्यवेगो नातितीक्ष्णो नातिमृदुरिति ॥ १५–१६ ॥

सरोजव्याख्या—स्वेदप्रवर्तनम्--स्वेद की अकारण प्रवृत्ति होती है । ऐसा विकृतिविषमसमवाय से होता है—ऐसा आचार्य कार्तिक का मत है । यह उचित भी है; क्योंकि हारीत ने भी कहा है कि कफवातज्वर से शिरोग्रह ( शिर का जकड़न ), पसीना और खाँसी होती है । 'स्वेदभवः' का अभिप्राय स्वेदोत्पत्ति है । 'मध्यवेगः' अर्थात् ज्वर का वेग न अधिक तीक्ष्ण ( तीव्र ) और न अधिक मृदु ( मन्द ) होता है । वातकफ दोनों स्रोत-अवरोधक हैं, किन्तु यहाँ विकृतिविषम समवाय से स्वेद की अति प्रवृति कही गयी है ॥ १५–१६ ॥

श्लेष्मपित्तज्वर-लक्षण

**लिप्ततिक्तास्यता तन्द्रा मोहः कासोऽरुचिस्तृषा ।**
**मुहुर्दाहो मुहुः शीतं श्लेष्मपित्तज्वराकृतिः ॥ १७ ॥**

( सु. उ. तं. ३९।५० )

मुख में चिपचिपाहट तथा कड़ुवापन, तन्द्रा, मोह ( मूर्च्छा ), कास, अरुचि, प्यास एवं बार-बार दाह तथा शीत का अनुभव होना—श्लेष्मपित्त ज्वर का लक्षण है ॥ १७ ॥

श्लेष्मपित्तज्वरलक्षणमाह--लिप्तेत्यादि । श्लेष्मणा लिप्तं पित्तेन तिक्तं च आस्यं मुखं यस्य, तस्य भावो लिप्ततिक्तास्यता । तन्द्रा निद्रावत्क्लान्तिः । मोहो मूर्च्छा । एतानि लिङ्गानि प्रायोभावित्वेन निर्दिष्टानि, तेनान्यान्यपि चरकोक्तानि बोद्धव्यानि । यथा--'तथा स्तम्भश्च संस्वेदः कफपित्तप्रवर्तनम्'-इति ॥ १७ ॥

सरोजव्याख्या—लिप्ततिक्तास्यता--अर्थात् श्लेष्मा से लिप्त एवं पित्त से तिक्त ( कड़ुवा ) जिसका मुख हो, उसे लिप्ततिक्तास्यता कहेंगे । तन्द्रा—निद्रा की तरह

क्लान्ति, मोह-मूर्च्छा—ये उपर्युक्त लक्षण प्रायः मिलते हैं, इसलिये इनका निर्देश माधव ने किया है। इसके अतिरिक्त चरकोक्त अन्य लक्षण द्रष्टव्य हैं। यथा—स्तम्भ, स्वेद तथा वमन के साथ कफ एव पित्त की प्रवृत्ति।

तन्द्रा का लक्षण—

इन्द्रियार्थेष्वसंवित्तिर्गौरवं जृम्भणं क्लमः।
निद्रार्त्तस्येव यस्येहा तस्य तन्द्रां विनिर्दिशेत्॥ ( सु० ४।४४ )

अर्थात् इन्द्रियों द्वारा शब्दादि विषयों का ग्रहण न होना, शरीर का भारीपन, जम्भाई तथा थकावट प्रतीत हो तथा निद्रा से पीड़ित की भाँति जिसकी चेष्टा हो, उसको 'तन्द्रा' कहना चाहिये॥ १७॥

सन्निपातज्वर-लक्षण

**क्षणे दाह क्षणे शीतमस्थिसन्धिशिरोरुजा।**
**सास्रावे कलुषे रक्ते निर्भुग्ने चापि लोचने॥ १८॥**
**सस्वनौ सरुजौ कर्णौ कण्ठः शूकैरिवावृतः।**
**तन्द्रा मोहः प्रलापश्च कासः श्वासोऽरुचिर्भ्रमः॥ १९॥**
**परिदग्धा खरस्पर्शा जिह्वा स्रस्ताङ्गता परम्।**
**ष्ठीवनं रक्तपित्तस्य कफेनोन्मिश्रितस्य च॥ २०॥**
**शिरसो लोठनं तृष्णा निद्रानाशो हृदि व्यथा।**
**स्वेदमूत्रपुरीषाणां चिराद्दर्शनमल्पशः॥ २१॥**
**कृशत्वं नातिगात्रःणां प्रततं कण्ठकूजनम्।**
**कोठानां श्यावरक्तानां मण्डलानां च दर्शनम्॥ २२॥**
**मूकत्वं स्रोतसां पाको गुरुत्वमुदरस्य च।**
**चिरात् पाकश्च दोषाणां सन्निपातज्वराकृतिः॥ २३॥**

( च० चि० ३।१०३-१०९ )

क्षण भर में दाह एवं क्षण भर में शीत का अनुभव, अस्थि-सन्धि-शिर में पीड़ा, नेत्रों का अश्रुपूर्ण-मलिन-लाल तथा धँसा होना, कानों में सांय-सांय शब्द तथा पीड़ा होना, गले में यव-शूक भरे रहने के समान अनुभव होना, तन्द्रा, मोह, प्रलाप, कास, श्वास, अरुचि, भ्रम, जिह्वा का जली हुई एवं खुरदरी होना, अङ्गों की बहुत अधिक शिथिलता, रक्त-पित्त एवं कफ मिश्रित ष्ठीवन, शिर को हिलाते रहना, तृष्णा, निद्रा-नाश, हृदय में पीड़ा, स्वेद-मूत्र एवं पुरीष का देर से एवं अल्प मात्रा में निकलना, शरीर का अत्यधिक कृश न होना, कण्ठ में निरन्तर घुरघुराहट होना, सम्पूर्ण शरीर पर श्याम एवं लाल रंग के चकत्तों का निकलना, रोगी का मूक (बोलने में असमर्थ) होना, स्रोतों ( मुख-नासा-कर्ण ) आदि में पाक हो जाना, उदर में भारीपन तथा दोषों का परिपाक विलम्ब से होना सन्निपातिक ज्वर का लक्षण है॥ १८-२३॥

सान्निपातिकज्वरलक्षणमाह—क्षणे दाह इत्यादि। रुजा शूलम्, अस्थ्या-

दिभिः सम्बध्यते। सास्रावे साश्रुणी। कलुषे आविलवर्णे। निर्गता भुग्नता संकुचितता ययोस्ते निर्भुग्ने, 'बिस्फारिते इत्यर्थः' इति जेज्जटः,' अन्तः-प्रविष्टे'—इत्यन्ये, 'अतिकुटिले'—इति चक्रः। शूकैः शूकशिम्बि ( म्बा ) धान्यादेः। परिदग्धा दग्धवत्कृष्णवर्णा। खरस्पर्शा खरो गोजिह्वावत् स्पर्शो यस्यां सा तथा। स्रस्ताङ्गता निःसहायावयवता। ष्ठीवनं रक्तस्य पित्तस्य वा मुखेन स्वल्पोद्गिरणम्। शिरसो लोठनमितस्ततश्चालनम्। कृशत्वं नाति-गात्राणां दोषपूर्णत्वेन। प्रततं निरन्तरम्। कोठो भालुकितन्त्रे पठितः। तथ्या—'वरटीदष्टसंकाशः कण्डूमांल्लोहितोऽस्रकफपित्तात्। क्षणिकोत्पाद-विनाशः कोठ इति निगद्यते तज्ज्ञैः'—इति। मूकत्वं मन्दवचनता, अवच-नता वा। गुरुत्वमुदरस्य च उदरगौरवम्, चिरात् पाकश्च दोषाणामिति अतिसामतारब्धत्वेन। चकारादन्यान्यपि बोद्धव्यानि। यदाह वाग्भटः—'तद्वच्छीतं महानिद्रा दिवा जागरणं निशि। सदा वा नैव वा निद्रा महान् स्वेदोऽथवा न वा॥ गीतनर्तनहास्यादिविकृतेहाप्रवर्तनम्'—( अ. हृ. नि. २।२७-२८ ) इति। एतच्च लक्षणं त्रयोदशसन्निपातेषु मध्ये स्वमानाद् वृद्धैर्दोषस्तुल्यैरारब्धस्य ज्वरस्य चरकेण पठितम्; द्व्युल्बणादीनां च द्वादशानां लक्षणं तत्रैव द्रष्टव्यम्। तथा च काश्मीरपाठे चरकः—

'भ्रमः पिपासा दाहश्च गौरवं शिरसोऽतिरुक्।
वातपित्तोल्वणे विद्याल्लिङ्गं मन्दकफे ज्वरे॥
शैत्यं कासोऽरुचिस्तन्द्रापिपासादाहहृद्व्यथाः।
वातश्लेष्मोल्बणे व्याधौ लिङ्गं पित्तावरे विदुः॥
छर्दिः शैत्य मुहुर्दाहस्तृष्णा मोहोऽस्थिवेदना।
मन्दवाते व्यवस्यन्ति लिङ्गं पित्तकफोल्बणे॥
सन्ध्यस्थिशिरसः शूलं प्रलापो गौरवं भ्रमः।
वातोल्बणे स्याद् द्व्यनुगे तृष्णा कण्ठास्यशुष्कता॥
रक्तविण्मूत्रता दाहः स्वेदस्तृष्णा बलक्षयः।
मूर्च्छा चेति त्रिदोषे स्याल्लिङ्गं पित्ते गरीयसि॥
आलस्यारुचिहृल्लासदाहवम्यरतिभ्रमैः।
कफोल्बणं सन्निपातं तन्द्राकासेन चादिशेत्॥
प्रतिश्या छर्दिरालस्यं तन्द्राऽरुच्यग्निमार्दवम्।
हीनवाते पित्तमध्ये लिङ्गं श्लेष्माधिके मतम्॥
हारिद्रमूत्रनेत्रत्वं दाहस्तृष्णा भ्रमोऽरुचिः।
हीनवाते मध्यकफे लिङ्गं पित्ताधिके मतम्॥
शिरोरुग्वेपथुश्वासप्रलापच्छर्द्यरोचकाः।

हीनपित्ते मध्यकफे लिङ्गं वाताधिके मतम् ॥
शीतता गौरव तन्द्रा प्रलापोऽस्थिशिरोऽतिरुक् ।
हीनपित्ते वातमध्ये लिङ्गं श्लेष्माधिके विदुः ॥
वर्चोभेदोऽग्निदौर्बल्यं तृष्णा दाहोऽरुचिर्भ्रमः ।
कफहीने वातमध्ये लिङ्गं पित्ताधिके विदुः ॥
श्वासः कासः प्रतिश्यायो मुखशोषोऽतिपार्श्वरुक् ।
कफहीने पित्तमध्ये लिङ्गं वाताधिके मतम्' ॥

( च. चि. ३।९१-१०२ ) इति ।

विकृतौ नियमो नास्ति; तेन विकृतिविषमसमवायादनेकप्रकारा भवन्ति[1] । अतः सुश्रुतेनाप्यन्यादृशं सन्निपातलक्षणं पठितम्—

'नात्युष्णशीतोऽल्पसंज्ञो भ्रान्तपेक्षी हतप्रभः ।
खरजिह्वः शुष्ककण्ठः स्वेदविण्मूत्रवर्जितः ॥
साश्रुनिर्भुग्ननयनो भक्तद्वेषी हतस्वरः ।
श्वसन्निपतितः शेते प्रलापोपद्रवान्वितः ॥
अभिन्यासं तु तं प्राहुर्हतौजसमथापरे ।
सन्निपातज्वरं कृच्छ्रमसाध्यमपरे जगुः' ॥

( सु. उ. ३९।३९-४१ ) इति ।

तथा मालुकितन्त्रे द्व्युल्बणैकोल्बणादिलक्षणमन्यथा पठितम् । [2]तद्यथा—

'वातपित्ताधिको यस्य सन्निपातः प्रकुप्यति ।
तस्य ज्वरोऽङ्गमर्दस्तृट्तालुशोषप्रमीलकाः ॥
आध्मानतन्द्रारुचयः श्वासकासभ्रमश्रमाः ।
पित्तश्लेष्माधिको यस्य सन्निपातः प्रकुप्यति ॥
अन्तर्दाहो बहिः शीतं तस्य तन्द्रा च बाधते ।
तुद्यते दक्षिणं पार्श्वमुरःशीर्षगलग्रहाः ॥
निष्ठीवेत् कफपित्तं च तृष्णा कण्डूश्च जायते ।
विड्भेदश्वासहिक्काश्च बाधन्ते सप्रमीलकाः ॥

---

१. ''अस्याग्रे क पुस्तके—प्रकृतिसमवाये तु सन्निपाते पृथग्वातादिज्वरलक्षणं ज्ञेयं; हीनमध्याधिकक्रमेण सन्निपाता एव षट्, द्व्युल्वणत्वेन त्रयः, एकोल्वणत्वेन त्रयः, समत्वेनैकः, एवं त्रयोदश प्रकृतौ' इत्यधिकः पाठ उपलभ्यते ।

२. अस्याग्रे क पुस्तके—'वातः पित्ताधिकोऽयं प्रथममुपचितो हन्ति वह्निं शरीरे, श्लेष्मत्वं याति भुक्तं सकलमपि ततोऽसौ कफो वायुदुष्टः । स्रोतांस्यापूर्य रुन्ध्यादनिलमथ मरुत् कोपयेत् पित्तमन्तः सम्मूर्च्छर्यान्योन्यमेते प्रबलमिति नृणां कुर्वते सन्निपातम्' इत्यधिकः पाठ उपलभ्यते ।

विभुफल्गू च तौ नाम्ना सन्निपातावुदाहृतौ ।
श्लेष्मानिलाधिको यस्य सन्निपातः प्रकुप्यति ॥

तस्य शीतज्वरो निद्रा क्षुत्तृष्णापार्श्वनिग्रहः ।
शिरोगौरवमालस्यमन्यास्तम्भप्रमीलकाः ॥

उदरं दह्यते चास्य कटिर्वस्तिश्च दूयते ।
सन्निपातः स विज्ञेयो मकरीति सुदारुणः ॥

वातोल्बणः सन्निपातो यस्य जन्तोः प्रकुप्यति ।
तस्य [4]तृष्णाज्वरग्लानिपार्श्वरुग्दृष्टिसंक्षयाः ॥

पिण्डिकोद्वेष्टनं दाह ऊरुसादो बलक्षयः ।
सरक्तं चास्य विण्मूत्रं शूलं निद्राविपर्ययः ॥

निर्भिद्यते गुदं चास्य वस्तिश्च परिकृत्यते ।
आयम्यते भिद्यते च हिक्कते विलपत्यपि ॥
मूर्च्छते स्फायते रौति नाम्ना विस्फुरकः स्मृतः ।
पित्तोल्बणः सन्निपातो यस्य जन्तोः प्रकुप्यति ॥
तस्य दाहो ज्वरो घोरो बहिरन्तश्च बर्धते ।
शीतं च सेवमानस्य कुप्यतः कफमारुतौ ॥
ततश्चैनं प्रधावन्ते हिक्काश्वासप्रमीलकाः ।
विसूचिका पर्वभेदः प्रलापो गौरवं क्लमः ॥
नाभिपार्श्वरुजा तस्य स्विन्नस्याशु विवर्धते ।
स्विद्यमानस्य रक्तं च स्रोतोभ्यः सम्प्रवर्तते ॥
शूलेन पीड्यमानस्य तृष्णा दाहश्च वर्धते ।
असाध्यः सन्निपातोऽयं शीघ्रकारीति कथ्यते ॥
नहि जीवत्यहोरात्रमेतेनाविष्टविग्रहः ।
कफोल्बणः सन्निपातो यस्य जन्तोः प्रकुप्यति ॥
तस्य शीतज्वरस्वप्नगौरवालस्यतन्द्रयः ।
छर्दिमूर्च्छातृषादाहतृप्त्यरोचकहृद्ग्रहाः ॥
ष्ठीवनं मुखमाधुर्यं श्रोत्रवाग्दृष्टिनिग्रहः ।
श्लेष्मणो निग्रहं चास्य यदा प्रकुरुते भिषक् ॥
तदा तस्य भृशं पित्तं कुर्यात् सोपद्रवं ज्वरम् ।
निगृहीते तु पित्ते च भृशं वायुः प्रकुप्यते ॥
निराहारस्य सोऽत्यर्थं मेदोमज्जास्थि बाधते ।
अथात्र स्नाति भुङ्क्ते वा त्रिरात्रं न हि जीवति ॥

मेदोगतः सन्निपातः कफ्फणः स उदाहृतः ।
कामान्मोहाच्च लोभाच्च भयाच्चायं प्रपद्यते ॥
मध्यहीनाधिकैर्दोषैः सन्निपातो यदा भवेत् ।
तस्य रोगास्त एवोक्ताः प्रायो दोषबलाश्रयाः ॥ इत्यादि ।

ननु, वातादयः परस्परं विशुद्धगुणाः; विरुद्धगुणानां च सम्भूयैककार्यारम्भकत्वं नोपपद्यते, परस्परोपघातात्तुहिनदहनयोरिव; तत् कथं सान्निपातिकविकारोत्पत्तिरिति[1] ? अत्र समाधानमुक्तं दृढबलेन यथा—'विरुद्धैरपि

१. अस्याग्रे क पुस्तके तद्यथा—वातस्य शीतरूक्षादिगुणयुक्तस्य उष्णस्निग्धादिगुणयुक्तेन पित्तेन, तथा कफस्य गौरवस्निग्धात्मकस्योभाभ्यां विरोधः । 'तत्र रूक्षो लघुः शीतः खरः सूक्ष्मश्चलोऽनिलः । पित्तं सस्नेहतीक्ष्णोष्णं लघु विस्रं सरं द्रवम् । स्निग्धः शीतो गुरुर्मन्दः श्लक्ष्णो मृत्स्नः स्थिरः कफः ॥ कट्वम्ललवणं पित्तं स्वाद्वम्ललवणः कफः । कषायतिक्तकटुको वायुर्दृष्टोऽनुमानतः' इति । किञ्च, मिथ्याहारविहाराभ्यां दोषा युगपदुत्पद्यन्ते, आहोस्वित्कालव्यवधानेन ? आद्ये समबलत्वेन तारतम्येन वा ? नाद्यः; सर्वेषां समबलत्वेन परस्परघातकानां युगपदुत्पत्तिर्न स्यात् । अथ भिन्नाश्रयतया साऽस्तु; तदपि न, कुपितानां सर्वदेहव्याधित्वेन परस्परसंबन्धात् । यदुक्तं—'व्याप्नोति सहसा देहमापादतलमस्तकम्' इति । किंच ज्वरोत्पत्तौ तावत् कुपितानामामाशयगतानां रसदूषकाणां ज्वरोत्पादकत्वं, तन्मिलितानामेव स्याद्यथादृष्टेनेति । न द्वितीयः, पूर्वदोषाधिकत्वात् । किंच तारतम्येनोत्पत्तौ मूषकमार्जारवद्विरोधे प्रागेव तेन प्रबलेन दुर्बलाघातः सुकरः; दृश्यते च मात्स्यो न्यायः ।

अथ युगपदुत्पादका आहारादयो न भवन्ति; तत्र युगपदुत्पादकद्रव्यमेकमनेकं वा ? तस्य पाञ्चभौतिकत्वेन विरुद्धगुणाधिकार(करण)स्य त्रिदोषोत्पादकत्वं न स्यात् । अस्तु वाऽविचारितरमणीयम् । एकमेवाभ्यवह्रीयत इति कथम् ? अस्तु वा साधकत्वेन सहकारिणि द्रव्याभ्यवहारे तस्य विरुद्धगुणवत्त्वेन दोषान्तरघातकत्वेनानुत्पत्तिः तदवस्थतयैव जायमानः केवलैकदोषजो न संसर्गसन्निपातजो ज्वर इति । अथादृष्टाधीनत्वेन सहकारिणो भावे ( संभवे ) एकाभ्यवहारे सन्निपातः, तर्हि सर्वेषां समबलत्वेनेत्यत्रोक्तदोषः स्यात् । अथानेकद्रव्याणामभ्यवहारे त्रिदोषप्रकोपणं न संभवति । तत्र तुल्यानामेवाभ्यवहारः कथम् ? यतो भिन्नरुचित्वात् । यथारुच्यभ्यवहारे तारतम्यसंबन्धात् । तारतम्येनैव भवति प्रकोपो न युगपदिति प्रतिज्ञाहानिः । अत्राप्यदृष्टाधीनत्वात्तुल्याभ्यवहारे प्रतिघातकत्वाभावेऽपि; यौगपद्यं, तर्हि स एव दोषः । अथ कालव्यवधानेन, तत्र पूर्वस्मादुत्तरस्य भिन्नः कालो भवेत्; समबलो वा न्यूनाधिकबलो वा ? नाद्यः, उपसञ्जातविरोधित्वेनोत्पत्तुमेव न शक्नोति । न द्वितीयः, न्यूनबलत्वेन पूर्वप्रबलेनैव विनाशितत्वात्, अकिञ्चित्करत्वाच्च । न तृतीयः, विचारासहत्वात् । तत्र वक्तव्यमधिकबलत्वमुत्पत्तेः पूर्वं पश्चाद्वा ? नाद्यः, अनुत्पन्नस्याधिक्याभावात् । अधिकत्वं धर्मः, स तु सति धर्मिणि चिन्त्यः । अथ पश्चात् ? तन्न, उत्पत्त्यधिके अधिकेन घातस्योपसंजातविरोधिन उत्पत्तिरेव न, कुतोऽधिकत्वम् । अत्राप्यधिकत्वं न सम्भवति । तस्माद्विरुद्धगुणानां सम्भूय कर्तृत्वं घटघटाभावयोरिव घटघटप्रध्वंसयोरिव सदावस्थायित्वं नास्ति दहनतुहिनवत् ?

अत्रोच्यते—सर्वे विकल्पा अनङ्गीकारपाशहताः, सन्निपातस्तु स्यादेव, मिथ्याहारादिना कुपिता दोषा युगपत् कालव्यवधानेन वा समबलत्वेन तारतम्येन वा परस्परविरुद्धा अपि स्वस्थानादामाशयमागत्य रसं दूषयित्वा द्वन्द्वसन्निपातोत्पादका भवन्ति, उक्तं च—मिथ्याहारेत्यादि । कालव्यवधानेनोत्पन्नानामपि कालान्तरेण यौगपद्यमेव भवतीति न कदा (का) चिदनुपपत्तिः । ननु, कथमादिपश्चाद्भावेनोत्पन्नानां यौगपद्यमिति चेत् ? तन्न; दोषाद्दोषान्तरोत्पत्तेः । तदुक्तं—'एकः प्रकुपितो दोषः सर्वानेव प्रकोपयेत् । एकः प्रशमितो दोषः सर्वान् दोषान्निवारयेत्' इति । तथा च चरकः—'कश्चिद्धि रोगो

न त्वेते गुणैर्घ्नन्ति परस्परम्। दोषाः सहजसात्म्यत्वाद्धोरं विषमहीनिव' इति (च. चि. २६।२९३) एतच्चान्ये दूषयन्ति—सहजत्वादित्यनैकान्तिकं, यतः सहजानपि धातून् दोषा उपघ्नन्ति; सात्म्यत्वादित्यपि साध्याविशिष्टं, यतः सात्म्यत्वमबाधकत्वं, तदेव च दोषाणामिह साध्यम् ? अत्रोच्यते—दोषा नोपघ्नन्तीति कोऽयमनुपघातः साध्यते ? विकृतेरकारकत्वं वा ? अविनाशकत्वं वा ? नाद्यः, दोषाणां परस्परं विकृतिकर्तृत्वात्। यथोक्तं चरके—'विशोषयेद् वस्तिगतं सशुक्रं मूत्रं सपित्तं पवनः कफं वा। यदा तदाऽश्मर्युपजायते तु क्रमेण पित्तेष्विव[1] रोचना गोः' इति (च. चि. २६।३६)। तथा चोक्तं वाग्भटेन—'सश्लेष्मभेदः पवनः साममत्यर्थसञ्चितम्। अभिभूयेतरं दोषमूरू चेत् प्रतिपद्यते ॥ सक्थ्यस्थिनी प्रपूर्यान्तः श्लेष्मणा स्तिमितेन च। तदा स्तभ्नाति तेनोरू स्तब्धौ शीतावचेतनौ' (वा. नि. १५) इति। अविनाशकत्वं तु विद्यत एव, धातुदोषयोः परस्परं च दोषाणां सर्वथोच्छेदप्रतिपादकागमाभावात्, मरणप्रसङ्गात्; दोषाणामपि देहधारकत्वात्; तस्मात् सर्वथोच्छेदनिरासाभिप्रायेणैव दृढबलवचनमिह द्रष्टव्यं; ततः कुतोऽनैकान्तिकता। न चैवं सति विषस्य विषादकर्तृत्वेन दृष्टान्तविफलत्वं, विषस्य विषादादवान्तरव्यापारस्य[2] प्राणविनाशकत्वात्; न च सर्वात्मना दृष्टान्तो भवतीति। सात्म्यत्वादित्यस्यायमर्थः—सात्म्यत्वेन प्रतीयमानत्वात्। दोषाः परस्परं नोपघ्नन्ति, अनुपघातकत्वेन प्रतीयमानत्वात्; यद्यथा प्रतीयते तत्तथा निर्दिश्यते, यथाऽग्निकार्यो धूमोऽग्निकार्यत्वेनेति तत् कुतः साध्याविशिष्टत्व-

---

रोगस्य हेतुर्भूत्वा प्रशाम्यति'—इति। अत्र रुजाकरत्वाद्दोषोऽपि रोग इति टीकाकृतो व्याचक्षते, 'विकृतो दोषो रोग' इति समुदायसमुदायिनोरभेदवादिनां मतं पूर्वमेवोक्तम्। अन्यच्च तथा—'विकृताविकृता देहं घ्नन्ति ते वर्तयन्ति च' इति। विकृतानां घातकत्वं रोगरूपेणैव भवति, या विकृतिः स एव रोग इति न दोषरोगयोर्भेदः। अस्तु वा भेदः, मिलितैर्दोषै रोगः क्रियत इति। कथञ्चिदपि एकानेकद्रव्याभ्यवहारे सहकारिणो दैवात् त्रयाणां प्रकोपो भवत्येव। उक्तं च—'दृष्टापराधजः कश्चित् कश्चित्पूर्वापराधजः। तत्सङ्कराद्भवत्यन्यो व्याधिरेवं त्रिधा स्मृतः' इति, तथा—'पित्तक्षोभे तिलाभ्यङ्गो रात्रौ च दधिभोजनम्। अनिद्रा मैथुनं यस्य सन्निपातो भवेद् ध्रुवम्' इति। ननु, दोषाणां बाध्यबाधकभावेनादिपश्चाद्भावेनोत्पत्तिर्दोषाद्दोषान्तरोत्पत्तिर्वा न सम्भवतीत्यनुपदमेवोक्तम्' इत्यधिकः पाठ उपलभ्यते।

१. अस्याग्रे क पुस्तके—'न द्वितीयः दोषादोषान्तरोत्पत्तिर्दर्शितैवानुपदम् 'एकः प्रकुपितो दोष'' इत्यादिना, अतो दोषस्त देशान्तरविल(ग)ति (?) कारणत्वादन्य एवानुपघातः' इत्यधिकः पाठ उपलभ्यते।

२. अस्याग्रे क. पुस्तके 'अतः सात्म्यत्वात् सहजत्वादविरोधित्वमिति यदुक्तमनैकान्तिकत्वं तन्न, उपघातशब्दस्य न्यूनाधिकपर्यायविरोधित्वात्। आहार दोषा उपघ्नन्तीति दूष्यरसधातुदूषकत्वं दोषाणां; तच्च रसदूष्यप्रकृत्यन्यथापादकत्वं नान्यदिति कुतो नाशः। साध्याविशिष्टता तु निरस्ता स्पष्टतरा' इत्यधिकः पाठ उपलभ्यते।

मिति। चक्रस्तु सहजसात्म्यत्वादित्येकमेव हेतुं व्याख्यातवान्—सहजं स्वाभाविकं दोषाणां सात्म्यत्वमिति। दृढबलोक्तहेतुद्वयास्वरसेन गयदासस्तु हेत्वन्तरमुक्तवान्, 'दैवाद्दोषस्वभावाद्वा दोषाणां सान्निपातिके। विरुद्धैः स्वगुणैः कश्चिन्नोपघातः परस्परम्' इति संक्षेपः ॥ १८-२३ ॥

सरोज व्याख्या—'रुजा' का अर्थ शूल होता है। शूल अस्थि, सन्धि और शिर में होता है। सास्रावे—अर्थात् नेत्र अश्रुयुक्त होते हैं। कलुष आविल वर्ण (गन्दा) को कहा जाता है। निर्भुग्ने—जिसमें भुग्नता अर्थात् संकुचित होने का सामर्थ्य न हो, इसका अर्थ नेत्र का विस्फारित होना है। ऐसा जेज्जट का कथन है। अन्य लोग निर्भुग्ने का अर्थ नेत्र का अन्तः प्रविष्ट होना करते हैं। अर्थात् नेत्र अन्दर की तरफ हो जाता है। आचार्य चक्रपाणि ने 'निर्भुग्ने' का अर्थ 'अतिकुटिल' किया है। नेत्र का सिकुड़कर टेढ़ा होना अभिप्राय है। शुकैः—शुकशिम्बी अर्थात् ऐसे शिम्बी धान्य जिसमें शूक ( टूड़ ) होते हैं। गले में शूक ( अंकुर ) निकलने जैसा मालूम होना। परिदग्धा—जिह्वा जली हुई कृष्ण वर्ण की हो जाती है। खर-स्पर्शा—जिह्वा गाय की जिह्वा के सदृश स्पर्श में खर ( खुरदरी ) हो जाती है। स्रस्ताङ्गता—निःसहाय की तरह हो जाना। ष्ठीवनं रक्तपित्तस्य—मुख के द्वारा कफ के साथ थोड़ा रक्त एवं पित्त का निकलना। शिरसो लोठनम्—शिर का इधर-उधर चलाना ( घुमाना ), । कृशत्वं नातिगात्राणाम्—दोष पूर्ण होने से शरीर का अधिक पतला न होना। प्रततं—निरन्तर गले में कबूतर के शब्द के समान घुरघुराहट। कोठ का लक्षण भालुकितन्त्र में कहा गया है—

वरटीदष्टसंकाशः कण्डूमाँल्लोहितोऽस्रकफपित्तात्।
क्षणिकोत्पादविनाशः कोठ इति निगद्यते तज्ज्ञैः॥

अर्थात् रक्त, कफ एवं पित्त के प्रकोप से शरीर पर वरटी ( ततैया ) के दंश के समान लाल रंग के खुजलीयुक्त चकत्ते हो जाते हैं, जो क्षण-क्षण में उत्पन्न एवं विनष्ट होते रहते हैं।

मूकत्वं—रोगी कम बोलता है। गुरुत्वमुदरस्य—उदर का भारीपन। चिरात् पाकश्च दोषाणाम्—अत्यधिक समता होने के कारण दोषपाक बिलम्ब से होता है। चकार से अन्य लक्षण द्रष्टव्य हैं—रोगी को बार-बार शीत होता है, दिन में गहरी निद्रा तथा रात्रि में जागरण अथवा दिन-रात निद्रा अथवा निद्रा का सर्वथा अभाव, स्वेद अत्यधिक आता है, अथवा आता ही नहीं। गाना, नाचना तथा हंसना आदि विकृत चेष्टाओं की प्रवृत्ति होती है। ( अ० हृ० नि० २।२७-२८ )

चरक ने यह लक्षण तेरह सन्निपातों में से स्वभाव ( तुल्यरूप ) से वृद्ध दोष से उत्पन्न ज्वर का कहा है। द्व्युल्वण एकोल्वण आदि द्वादश सन्निपातों का लक्षण(चरक सूत्र १७।४४-६१ ) में द्रष्टव्य है। काश्मीर पाठ चरक में निम्नलिखित लक्षण हैं—

विभिन्न सन्निपातज ज्वर एवं उनके लक्षण

| सन्निपातज ज्वर के बारह भेद | विभिन्न सन्निपात ज्वर के लक्षण |
|---|---|
| १. वातपित्तोल्वण तथा हीनकफ | भ्रम, प्यास, दाह, शरीर का भारीपन एवं शिर में पीड़ा। |
| २. वातश्लेष्मोल्वण तथा हीनपित्त | शीत, खाँसी, अरुचि, तन्द्रा, पिपासा, दाह एवं हृदय-व्यथा। |
| ३. पित्तकफोल्वण तथा हीनवात | वमन, शीत, बार-बार दाह एवं तृष्णा, मोह एवं अस्थियों में पीड़ा। |
| ४. वातोल्वण हीनपित्त एवं हीनकफ | सन्धि-अस्थि-शिर में शूल, प्रलाप, गौरव, भ्रम- तृष्णा, कण्ठ एवं मुख में शुष्कता। |
| ५. पित्तोल्वण हीनवात एवं हीनकफ | मल-मूत्र लाल वर्ण का, दाह, पसीना, तृष्णा, बलक्षय एवं मूर्च्छा। |
| ६. कफोल्वण, हीनवात एवं हीनपित्त | आलस्य, अरुचि, मिचली, दाह, वमन, बेचैनी, भ्रम, तन्द्रा एवं खाँसी। |
| ७. हीनवात, मध्यपित्त एवं श्लेष्माधिक | प्रतिश्याय, छर्दि, आलस्य, तन्द्रा, अरुचि एवं अग्निमान्द्य। |
| ८. हीनवात, मध्यकफ एवं पित्ताधिक | मूत्र एवं नेत्र हारिद्रवर्ण, दाह, तृष्णा, भ्रम एवं अरुचि। |
| ९. हीनपित्त, मध्यकफ एवं वाताधिक | शिर में पीड़ा, कम्पन, श्वास, प्रलाप, छर्दि एवं अरोचक। |
| १०. हीनपित्त, मध्यवात एवं कफाधिक | शीत, गौरव, तन्द्रा, प्रलाप, अस्थि एवं शिर में वेदना। |
| ११. हीनकफ, मध्यवात एवं पित्ताधिक | पतला दस्त, अग्निदौर्बल्य, तृष्णा, दाह, अरुचि एवं भ्रम। |
| १२. हीनकफ, मध्यपित्त एवं वाताधिक | श्वास, कास, प्रतिश्याय, मुखशोष एवं तीव्र पार्श्वशूल। |

वस्तुतः दोषों की विकृति का कोई नियम नहीं होता। विकृतिविषमसमवायजन्य अनेक भेद हो सकते हैं। अतएव सुश्रुत ने सन्निपात ज्वर का लक्षण भिन्न प्रकार से किया है—रोगी न बहुत उष्ण, न बहुत शीत स्पर्श में होता है। अर्ध चैतन्यावस्था में रहता है। भ्रान्तापेक्षी—सभी पदार्थों को गलत ढंग से देखता है, स्वर नष्ट हो गया हो, जिह्वा खुरदरी हो, कण्ठ सूख गया हो, पसीना-मल-मूत्र की प्रवृति सब रुक जाते हैं, आँखों में आँसू भरे हों, हृदय बैठ रहा हो, भोजन से द्वेष हो, प्रभा क्षीण हो गयी हो, श्वास लेते हुए गिर जाता हो, प्रलाप आदि उपद्रव से युक्त हो, ऐसे लक्षण वाले ज्वर को 'अभिन्यास ज्वर' कहते हैं। अन्य आचार्यों ने इसे 'हतौजस ज्वर' कहा है। इस प्रकार सन्निपात ज्वर को कृच्छ्रसाध्य माना गया है। अन्य आचार्यों ने इसे असाध्य कहा है।

मालुकि तन्त्र में द्व्युल्वणैकोल्वणादि सन्निपात ज्वर का लक्षण निम्नलिखित ढंग से कहा गया है—

१. जिस रोगी में वातपित्ताधिक सन्निपात का प्रकोप होता है, उसको ज्वर, अङ्गमर्द, तृष्णा, तालुशोष, प्रमीलक, आध्मान, तन्द्रा, अरुचि, श्वास, कास, भ्रम और श्रम लक्षण पैदा हो जाता है।

२. जिसमें पित्तश्लेष्माधिक सन्निपात का प्रकोप होता है, उसे अन्तर्दाह, बाहर से शीत एवं तन्द्रा बाधित ( पीड़ित ) करते हैं, दक्षिणपार्श्व में तोद ( सूई चुभने जैसी पीड़ा ), छाती, शीर्ष ( सिर ) एवं गले में जकड़न, कफ के साथ कफ एवं पित्त का निकलना, तृष्णा, खुजली विड्भेद ( मल का पतला होना ), श्वास, हिक्का तथा प्रमीलक लक्षण मिलते हैं।

इन दोनों सन्निपातों को विधु एवं फल्गु कहा जाता है। अर्थात् प्रथम को विधु एवं द्वितीय को फल्गु कहा जाता है।

३. जिसमें श्लेष्मवातोल्वण सन्निपात का प्रकोप होता है, उसे शीतज्वर, निद्रा, भूख, प्यास, पार्श्वनिग्रह, शिर का भारी होना, आलस्य, मन्यास्तम्भ, प्रमीलक, उदर में दाह, कटि एवं वस्ति में वेदना होती है। इस दारुण सन्निपात को 'मकरी' कहते हैं।

४. जिसमें वातोल्वण सन्निपात का प्रकोप होता है, उसे तृष्णा, ज्वर, ग्लानि, पार्श्वरुक्, दृष्टिसंक्षय ( दृष्टिनाश ), पिण्डिकोद्वेष्टन, दाह, उरुसाद ( जाँघ में शिथिलता ), बलक्षय, मल-मूत्र के साथ रक्त की प्रवृत्ति, शूल, निद्रा का न आना, गुदा का फटता हुआ मालूम होना एवं वस्ति में काटने जैसी पीड़ा, अङ्ग-प्रत्यङ्ग का टूटना, हिचकी आना, विलाप करना, मूर्च्छा एवं चिल्लाना लक्षण मिलता है। इस सन्निपात को 'विस्फुरक' कहते हैं।

५. जिसमें पित्तोल्वण सन्निपात का प्रकोप होता है, उसे दाह एवं ज्वर अत्यधिक बहिर्दाह के साथ होता है। इस अवस्था में शीतल पदार्थों का सेवन करने पर कफ एवं वायु प्रकुपित हो जाते हैं, जिससे हिक्का, श्वास, प्रमीलक, विसूचिका, पर्वभेद ( सन्धियों में वेदना ), प्रलाप, भारीपन, क्लम, नाभि एवं पार्श्व में पीड़ा तथा पसीना होता है। पसीने के साथ-साथ स्रोतों से रक्त निकलता है। शूल से पीड़ित होने पर तृष्णा एवं दाह बढ़ जाते हैं। इस असाध्य सन्निपात को शीघ्रकारी कहा जाता है। इससे आक्रान्त रोगी चौबीस घण्टों में मृत्यु को प्राप्त होता है।

६. जिसमें कफोल्वण सन्निपात का प्रकोप होता है, उसे शीत ज्वर, निद्रा, भारीपन, आलस्य, तन्द्रा, छर्दि, मूर्च्छा, तृष्णा, दाह, तृप्ति, अरुचि, हृदय में जकड़ाहट, बार-बार थूकने की प्रवृत्ति, मुख में माधुर्य, सुनने-बोलने एवं देखने की शक्ति नष्ट हो जाती है। यदि चिकित्सक ऐसी स्थिति में कफ को रोकने का प्रयास करता है, तो पित्त प्रकुपित होकर उपद्रवयुक्त ज्वर को पैदा कर देता है। पित्त को रोकने पर वायु प्रकुपित हो जाती है। इस अवस्था में यदि रोगी लंघन करता है, तो बढ़ा हुआ वायु मेद, मज्जा एवं अस्थि को पीड़ित करता है। यदि रोगी स्नान एवं भोजन करता है, तो तीन दिन से अधिक नहीं जी सकता।

यह सन्निपात मेदोगत होता है। इसे 'कफफण' कहा जाता है। प्रायः यह सन्निपात काम, मोह, लोभ एवं मद से पैदा होता है।

दोषों की मध्य-हीन एवं अधिक ( उल्वण ) अवस्था से जब सन्निपात होता है, तो प्रायः दोष के बल के अनुसार रोग होता है।

**सन्निपात**—अब प्रश्न उठता है कि वातादि दोष परस्पर विरुद्ध गुण वाले हैं, विरुद्ध गुण वाले मिलकर एक कार्य नहीं कर सकते। जल एवं अग्नि के समान परस्पर विरुद्ध गुण वाले दोषों के योग से सन्निपात की उत्पत्ति किस प्रकार होगी? इसका समाधान करते हुए दृढ़बल ने कहा है—

विरुद्धैरपि न त्वेते गुणैर्घ्नन्ति परस्परम्।
दोषाः सहजसात्म्यत्वाद् घोरं विषमहीनिव ॥ (च० चि० २६।२६३)

अर्थात् जिस प्रकार भयङ्कर विष सर्प के शरीर में रहते हुए भी सर्प को नष्ट नहीं करता है, उसी प्रकार जन्मकाल से ही एक साथ रहने के कारण सात्म्य (अनुकूल) हुए ये वातादि दोष गुण में विरुद्ध होते हुए भी परस्पर एक दूसरे के गुण को नष्ट नहीं करते। अन्य लोग इस युक्ति को दूषित मानते हैं। उनके विचार से सहज हेतु अनैकान्तिक हैं, क्योंकि शरीरस्थ दोष शरीर की सहज धातुओं का विनाश करते हैं। सात्म्यवाद भी साध्यावशिष्ट होता है, क्योंकि सात्म्यत्व का अर्थ अबाधकत्व होता है। यही दोषों का अबाधकत्व सिद्ध करता है।

यहाँ पर 'दोषा नोपघ्नन्ति' अर्थात् दोष परस्पर उपघात नहीं करते, अनुपघात से क्या अर्थ किया जाय? विकृति न करना अथवा विनाश न करना। इसमें प्रथम पक्ष 'विकृति न करना' उचित नहीं प्रतीत होता; क्योंकि दोष परस्पर एक दूसरे को विकृत करते हैं। जैसा कि चरक ने कहा है—विकृत वायु वस्ति में पहुँच कर वस्तिगत शुक्र, मूत्र, पित्त एवं कफ को सुखाकर अश्मरी उत्पन्न कर देता है (च० चि० २६)। इसी प्रकार वाग्भट्ट ने ऊरुस्तम्भ की सम्प्राप्ति में कहा है—कफ एवं मेदोयुक्त वायु पित्त को अभिभूत (क्षीण) करके अत्यन्त सञ्चित सामदोष ऊरु स्थान में पहुँच जाता है और तब वही सक्थि की अस्थियों को मन्दगामी कफ द्वारा भीतर पूर्ण करके स्तब्ध कर देता है। इससे ऊरु स्तब्ध हो जाते हैं और शीतल, चेतनाहीन भी। ऐसा प्रतीत होता है जैसे दूसरे के हों (अ.हृ.नि. १५।४८-४९)।

अविनाशकत्व भाव द्वितीय पक्ष पाया जाता है। धातु और दोषों के परस्पर संघर्ष में दोषों द्वारा धातुओं का सर्वथोच्छेदन (पूर्णनाश) का शास्त्र में कहीं उल्लेख नहीं उपलब्ध होता। यदि ये एक दूसरे का समूल नाश कर दें, तो रोगी की मृत्यु का प्रसङ्ग हो जायगा, अर्थात् रोगी की मृत्यु हो जायगी, क्योंकि दोष भी शरीर के धारक हैं। इसलिए दोषों द्वारा सर्वथोच्छेद (पूर्णनाश) के निरास के अभिप्राय से ही दृढ़बल का कथन द्रष्टव्य है। इससे अनैकान्तिकता दोष की सम्भावना वहाँ रहती है?

विष के विषादकारक होने से सर्पों में भी विषाद पैदा होता है, इसलिए यह दृष्टान्त विफल नहीं हो सकता। विष का विषाद के अतिरिक्त प्राणविनाशक व्यापार भी पाया जाता है, किन्तु यह प्राणविनाशक प्रभाव (गुण) सर्पों पर लागू नहीं होता। सात्म्यत्वात् का अर्थ है—जो सात्म्यभाव से प्रतीत होता हो। अनुपघातक रूप में प्रतीत होने से दोष परस्पर उपघात नहीं करते, अतः जो जैसा प्रतीत होता है, वैसा ही उसका निर्देश किया जाता है। जैसे धूम अग्नि का कार्य होने से धूम को अग्नि का कार्य कहा जाता है।

चक्रपाणि ने 'सहजसात्म्यत्वात्' से एक ही हेतु माना है और उसकी व्याख्या की है—'सहजं स्वाभाविकं दोषाणां सात्म्यत्वम्' अर्थात् दोष का सात्म्यत्व स्वाभाविक है।

दृढ़बल के इन दोनों हेतुओं में कमी देखकर गयदास ने कहा है—

> दैवाद्दोषस्वभावाद्वा दोषाणां सान्निपातिके।
> विरुद्धैः स्वगुणैः कश्चिन्नोपघातः परस्परम्॥

अर्थात् दैवयोग या दोषों के स्वभाव से तथा परस्पर विरुद्ध गुणता के कारण दोषों का परस्पर उपघात नहीं होता॥ २३॥

सन्निपात ज्वर का असाध्य लक्षण

**दोषे विबद्धे नष्टेऽग्नौ सर्वसम्पूर्णलक्षणः ।**
**सन्निपातज्वरोऽसाध्यः कृच्छ्रसाध्यस्ततोऽन्यथा ॥ २४ ॥**
( च० चि० ३।१०९-११० )

दोषों के विबद्ध ( बाह्य प्रवृत्ति का अभाव ) होने, जाठराग्नि के नष्ट होने एवं सभी लक्षणों के पूर्ण होने पर सान्निपातिक ज्वर असाध्य होता है । उपर्युक्त लक्षणों में कुछ कमी हो, तो सन्निपात ज्वर असाध्य होता है ॥ २४ ॥

तस्य सन्निपातज्वरस्यासाध्यलक्षणमाह—दोषे विबद्ध इत्यादि । दोषो मलं पित्तादिश्च; जेज्जटस्तु मलमेवाह, विबद्ध इति वचनात् । नष्टाग्नित्वमाहारापाकगम्यम् । यदुक्तं चरके—'अग्निं जरणशक्त्या' ( च. नि. ४ ) इति । असाध्यकृच्छ्रसाध्याभिधानेन सुखसाध्यो न भवतीति दर्शितम् । उक्तं हि चरके—'सन्निपातो दुश्चिकित्स्यानाम्' ( च. सू. २५ ) इति । तथा भालुकिः—'मृत्युना सह योद्धव्यं सन्निपातं चिकित्सता' इति । सर्वसम्पूर्णलक्षण इति । सर्वाणि समग्राणि, सम्पूर्णानि बलीयांसि, लक्षणानि यस्य स तथा ॥ ॥ २४ ॥

सरोज व्याख्या—दोष शब्द से मल-मूत्रादि तथा वातादि दोष जानना चाहिए । आचार्य जेज्जट ने विवद्ध शब्द का प्रयोग होने से दोष शब्द से मल ही कहा है । आहार पाचन न होना अग्नि के नष्ट ( हीन ) होने का प्रतीक है । जैसा कि महर्षि चरक ने कहा है—आहार की पाचन क्रिया के अनुसार अग्नि शक्ति का अनुमान करना चाहिए । असाध्य एवं कृच्छ्रसाध्य का उल्लेख होने से ऐसा समझना चाहिए कि सन्निपात ज्वर सुखसाध्य कभी नहीं होता । चरक ने सन्निपात को दुश्चिकित्स्य कहा है ( च० सू० २५ ) । भालुकि ने कहा है कि सन्निपात की चिकित्सा करने वाले चिकित्सक को मृत्यु के साथ युद्ध करना होता है । अर्थात् सन्निपात मृत्यु के समान होता है । सर्व सम्पूर्ण लक्षणों से समग्र एवं बलबान् लक्षण समझना चाहिए ॥ २४ ॥

सन्निपात ज्वर की काल-मर्यादा

**[ सप्तमे दिवसे प्राप्ते दशमे द्वादशेऽपि या ।**
**पुनर्घोरतरो भूत्वा प्रशमं याति हन्ति वा ॥ १ ॥**
( सु. उ. ३९।४५-२, ४६-१ )

**सप्तमी द्विगुणा चैव नवम्येकादशी तथा ।**
**एषा त्रिदोषमर्यादा मोक्षाय च वधाय च ॥ २ ॥ ]**
( अ० हृ० नि० २।६२-२, ६३-१ )

सन्निपात ज्वर सातवें, दसवें अथवा बारहवें दिन और भी बढ़कर शान्त हो जाता है, अथवा रोगी को मार डालता है ॥

त्रिदोष ज्वर जब पुनरावृत्त हो जाता है, तब सात दिन वाला चौदह दिन, नौ दिन वाल- अठारह दिन एवं ग्यारह दिन वाला बाईस दिन रहता है। यह त्रिदोष की मर्यादा है। इसमें या तो रोगी स्वस्थ हो जाता है अथवा मृत्यु को प्राप्त हो जाता है ॥

सरोज व्याख्या—आतंकदर्पणकार ने लिखा है—

पित्तकफानिलवृद्धया दशदिवसद्वादशाहसप्ताहात् ।
हन्ति विमुञ्चति वाशु त्रिदोषजो धातुमलपाकात् ॥

अर्थात् पित्तप्रधान त्रिदोषज ज्वर दसवें दिन, कफप्रधान बारहवें दिन एवं वातप्रधान सातवें दिन शान्त हो जाता है अथवा रोगी को मार डालता है। ऐसी अवस्था में यदि दोष ( मल ) पाक हो जाय, तो रोगी बच जाता है और धातु-पाक होने पर रोगी मर जाता है। धातुपाक लक्षण तन्त्रान्तर ग्रन्थों में निम्न-लिखित है·—

सम्बाध्यमानो हृदि नाभिदेशे गात्रेषु वा पाकरुजान्वितेषु ।
पक्वेषु वा तेषु रुजाज्वरार्तः स धातुपाको कथितो भिषग्भिः ॥

अर्थात् धातुपाक होने पर हृदय, नाभिप्रदेश और सम्पूर्ण शरीर में अत्यन्त वेदना होगी। अथवा उन पाकों में ज्वर से पीड़ा होती है।

धातुपाक का अन्य लक्षण—

निद्रानाशो हृदि स्तम्भो विष्टम्भो गौरवारुची ।
अरतिर्बलहानिश्च धातूनां पाकलक्षणम् ॥
नाभेरूर्ध्वं हृदोऽधस्तात् पीडिते चेद् व्यथा भवेत् ।
धातोः पाकं विजानीयात् अन्यथा तु मलस्य च ॥

निराम ज्वर का लक्षण ही दोषपाक लक्षण होता है, जो आगे बतलाया गया है ॥

## सन्निपात ज्वर का उपद्रव

**सन्निपातज्वरस्यान्ते कर्णमूले सुदारुणः ।**
**शोथः सञ्जायते तेन कश्चिदेव प्रमुच्यते ॥ २५ ॥**

( च. चि. ३।२८७-२, २८८-३ )

सन्निपातिक ज्वर के अन्त में कर्णमूल में दुःखदायक शोथ ( Parotitis ) हो जाने पर कोई ही रोगी बच पाता है। अन्यथा प्रायः मर जाते हैं ॥ २५ ॥

सन्निपातज्वरोपद्रवमाह—सन्निपातेत्यादि ॥ २५ ॥

सरोज व्याख्या—सन्निपात ज्वर के समाप्त होने पर सन्निपात से क्षीण रोगियों के कर्णमूल में कष्टतम रागरुजादि युक्त शोफ हो जाता है। कर्णमूलिक शोथ ( Mumps ) से यह भिन्न होता है। 'कश्चिदेव प्रमुच्यते' के दो अर्थ किये

जाते हैं—१. जिसको यह हो जाता है, उससे कोई रोगी नहीं बच पाता है, प्रायः सभी रोगी मर जाते हैं—ऐसा अर्थ आतंकदर्पणकार ने किया है। २. ऐसे बहुत कम रोगी हैं, जिनको यह शोथ न होता हो। भावमिश्र ने कहा है—

ज्वरस्य पूर्वं ज्वरमध्यतो वा ज्वरान्ततो वा श्रुतिमूलशोथः।
क्रमादसाध्यः खलु कृच्छ्रसाध्यः सुखेन साध्यः मुनिभिः प्रदिष्टः॥

अर्थात् सन्निपात ज्वर के आरम्भ में होने वाला कर्णमूल शोथ असाध्य, मध्य में होने वाला कृच्छ्रसाध्य एवं अन्त में होने वाला सुखसाध्य होता है।

## अभिन्यास ज्वर ( Meningo-encephalitis )

**[ त्रयः प्रकुपिता दोषा उरःस्रोतोऽनुगामिनः।**
**आमाभिवृद्ध्या ग्रथिता बुद्धीन्द्रियमनोगताः॥ १॥**
**जनयन्ति महाघोरमभिन्यासं ज्वरं दृढम्।**
**श्रुतौ नेत्रे प्रसुप्तिः स्यान्न चेष्टां काञ्चिदीहते॥ २॥**
**न च दृष्टिर्भवेत्तस्य समर्था रूपदर्शने।**
**न घ्राणं न च सस्पर्शं शब्दं वा नैव बुध्यते॥ ३॥**
**शिरो लोठयतेऽभीक्ष्णमाहारं नाभिनन्दति।**
**कूजति तुद्यते चैव परिवर्तनमीहते॥ ४॥**
**अल्पं प्रभाषते किञ्चिदभिन्यासः स उच्यते।**
**प्रत्याख्यातः स भूयिष्ठः कश्चिदेवात्र सिद्ध्यति॥ ५॥ ]**

सम्प्राप्ति—वातादि तीनों दोष कुपित होकर उरःस्रोत-वक्षःस्थल ( फुफ्फुस एवं हृदय ) में अनुगमन करते हुए आमदोष की अत्यधिक वृद्धि से ग्रथित ( परस्पर गुँथना ) होकर बुद्धि, इन्द्रिय एवं मन को प्रभावित कर अत्यन्त भयानक एवं बलवान् अभिन्यास नामक ज्वर को उत्पन्न कर देते हैं।

लक्षण—सुनने एवं देखने की शक्ति का ह्रास, शारीरिक, मानसिक चेष्टाओं का विनाश, रोगी की दृष्टि देखने में असमर्थ तथा गन्ध, स्पर्श एवं शब्द का ज्ञान नहीं होता। रोगी सिर को इधर-उधर घुमाता रहता है, भोजन की इच्छा नहीं होती, कबूतर के समान घुर्घुर शब्द करता है, उसके शरीर में सूई चुभने सी पीड़ा होती है, रोगी बार-बार करवट बदलना चाहता है, बहुत ही कम बोल पाता है। इस भयंकर ज्वर को अभिन्यास ज्वर कहा जाता है। यह प्रायः असाध्य होता है, इससे पीड़ित कोई ही रोगी बच पाता है॥

## आगन्तुक ज्वर

**अभिघाताभिचाराभ्यामभिशापाभिषङ्गतः।**
**आगन्तुर्जायते दोषैर्यथास्वं विभावयेत्॥ २६॥**

अभिघात ( चोट ), अभिचार ( मन्त्रतन्त्रादि द्वारा मारणप्रयोग ), अभिशाप ( ब्रह्मर्षि-गुरु सिद्ध का आक्रोश ) एवं अभिषङ्ग ( काम-शोक-भय एवं क्रोध अथवा भूतों का आवेश ) से आगन्तुक ज्वर होता है। इनमें भी लक्षणों के साथ-साथ दोषों के भी लक्षण मिलते हैं ॥ २६ ॥

विषजन्य ज्वर

**श्यावास्यता विषकृते तथाऽतीसार एव च।**
**भक्तारुचिः पिपासा च तोदश्च सह मूर्च्छया ॥ २७ ॥**

विषजन्य ज्वर में चेहरे पर कालापन, अतिसार, भोजन में अरुचि, प्यास, सूइयों के चुभने सी पीड़ा और मूर्च्छा पायी जाती है ॥ २७ ॥

ओषधिगन्धज ज्वर

**ओषधिगन्धजे मूर्च्छा शिरोरुग्वमथुः क्षवः।**

तीव्र औषधि के गन्ध से उत्पन्न ज्वर में मूर्च्छा, शिरःशूल, वमन एवं छींक आती है।

कामज्वर

**कामजे चित्तविभ्रंशस्तन्द्राऽऽलस्यमभोजनम् ॥ २८ ॥**
**हृदये वेदना चास्य गात्रं च परिशुष्यति।**

कामज ज्वर में चित्तविभ्रंश, तन्द्रा, आलस्य, भोजन की अनिच्छा, हृदय में वेदना एवं शरीर सूखता जाता है।

भयादिजन्य आगन्तुक ज्वर

**भयात् प्रलापः शोकाच्च भवेत् कोपाच्च वेपथुः।**
**अभिचाराभिशापाभ्यां मोहस्तृष्णा च जायते ॥ २९ ॥**
**भूताभिषङ्गादुद्वेगो हास्यरोदनकम्पनम् ।**

( सु. उ. तं ३९ )

भय एवं शोक से उत्पन्न ज्वर में प्रलाप एवं क्रोध उत्पन्न ज्वर में कम्प होता है। अभिचार तथा अभिशाप से होने वाले ज्वर में मोह एवं तृष्णा होती है। भूताभिषङ्गज ज्वर में उद्वेग, कभी हँसना, कभी रोना एवं कम्पन होता है।

आगन्तुज्वरमाह—अभिघातेत्यादि। अभिघातोऽभिहननं शस्त्रलोष्टमुष्टि-लगुडादिभिः; अभिचारः श्येनादियागकृतः, अथवा विपरीतैर्मन्त्रैर्लौहस्रुचा सर्षपादिहोम इत्याहुः। अभिषङ्गः कामादीनां भूतानां च सम्बन्धः; यदुक्तं चरके—'कामशोकभयक्रोधैरभिषक्तस्य यो ज्वरः। सोऽभिषङ्गज्वरो ज्ञेयो

यश्च भूताभिषङ्गजः' ( च. चि. ३।१४४ ) इति। अभिशापो ब्राह्मणगुरुवृद्धसिद्धानामनिष्टाभिशंसनम्। तं चागन्तुज्वरं यथास्वं दोषैर्जानीयात्। यदुक्तम्—'कामशोकभयाद्वायुः' इत्यादि। अयं च दोषसम्बन्धः पश्चाद्भावी न त्वारम्भक इति सम्प्राप्त्यवसरे निरूपितम्। श्यावास्यतेत्यादि। श्यावः शुक्लानुविद्धः कृष्णो वर्णः; श्यामवर्ण इत्यन्ये। विषकृते स्थावरविषभक्षणादिकृते; अतीसारः तद्विषस्याधोगत्वात्। ओषधिगन्धज इति तीव्रौषधिगन्धघ्राणजे, 'पुष्पेभ्यो गन्धरजसी ओजस्विभ्यो यदाऽनिलः' (सू. उ. अ. २९) इत्यादिना वृद्धसुश्रुतेन पठितं तृणपुष्याख्यं ज्वरमत्रैवान्तर्भावयन्ति। कामज इत्यादि अभिमतकामिन्यप्राप्तिनिमित्ते। चित्तविभ्रंशो भ्रमादिः। यदाह वाग्भटः—'कामाद् भ्रमोऽरुचिर्दाहो ह्रीनिद्राधीधृतिक्षयः' ( अ. हृ. नि. २।४२ ) इति।

भयादिति भयाज्जाते ज्वरे। एव शोकात् कोपादित्येतयोर्बोद्धव्यं; शोकात् प्रलाप इति सम्बन्धः; प्रलापश्चात्र वातकार्यः, तस्य वातपित्तकार्यत्वात्। ( विशेषनिश्चयस्तु निदानात्, निदानमपि लक्षणं भवति ) उक्तं च—'कामशोकभयाद्वायुः क्रोधात् पित्तं त्रयो मलाः' (च. चि. ३।११५) इत्यादि। यद्येवं तत् कुतः क्रोधजे वेपथुः ? तस्य वातकार्यत्वात्। उच्यते— 'एकः प्रकुपितो दोषः सर्वानेव प्रकोपयेत्' इति वचनात् पित्तकोपितवातजन्य एवात्र वेपथुः, क्रुद्धश्च वेपमानो दृश्यत इति, न हि दृष्टेरनुपपन्नं नामेति जेज्जटः। क्रोधः पित्तमिव वातं च कोपयतीति, तद्युक्तम्। यदाह विदेहः— 'क्रोधशोकौ स्मृतौ वातरक्तपित्तप्रकोपणौ' इति। कोपाच्चेति चकारेण शिरोरुजं समुच्चिनोति। यदाह वाग्भट—क्रोधात् कम्पः शिरोरुक् च, प्रलापो भयशोकजः' ( अ. हृ. नि. २।४२)—इति। मानसत्वाविशेषेऽपि भयजादिनां पृथगुपादानं हेतुभेदात्, हेतुभेदाच्च भेदाभिधानं हेतुप्रत्यनीकचिकित्सार्थमिति। अभिचारेत्यादि। तृष्णा चेति चकारेणाभिचारजे दाहादिकं समुच्चिनोति। यदुक्तं हारीतार्थानुवादिना वाग्भटेन—'तत्राभिचारिकैर्मन्त्रैर्हूयमानस्य तप्यते। पूर्वं चेतस्ततो देहस्ततो विस्फोटतृड्भ्रमैः॥ सदाहमूर्च्छैर्ग्रस्तस्य प्रत्यहं वर्धते ज्वरः' ( अ. हृ. नि. २।४४-४५ )—इति। भूताभिषङ्गादिति भूता देवग्रहादय उन्मादनिदाने वक्ष्यमाणाः, तेषामभिषङ्गः सम्बन्धः। उद्वेग उद्विग्नचित्तता॥ २६–२९॥

**सरोज व्याख्या**—शस्त्र, मिट्टी का ढ़ेला, मुक्का एवं लाठी आदि के प्रहार को अभिघात कहते हैं। श्येनादि यज्ञ द्वारा की गई क्रिया को अभिचार कहा जाता है अथवा विपरीत मन्त्रों द्वारा लोह के स्रुव से सरसों आदि द्रव्यों के हवन को अभिचार

कहते हैं। काम-क्रोध-शोक तथा भय आदि भूतादि ( देवादिग्रह एवं जीवाणु ) के के सम्बन्ध ( आवेश ) को अभिषङ्ग कहते हैं। जैसा कि चरक ने कहा है—

कामशोकभयक्रोधैरभिषक्तस्य यो ज्वरः।
सोऽभिषङ्गज्वरो ज्ञेयो यश्च भूताभिषङ्गजः ॥ ( च० चि० ३ )

ब्राह्मण-गुरु-वृद्ध-सिद्ध के अनिष्ट अभिशंसन ( चिन्तन ) अथवा आक्रोश को अभिशाप कहा जाता है। उपर्युक्त चारों प्रकार के कारणों से उत्पन्न होने वाले ज्वर को आगन्तुक ज्वर कहते हैं। इसमें लक्षणों के अनुसार दोषों को जानना चाहिए। जैसा कि कहा गया है—"कामशोकभयाद् वायुः" अर्थात् काम-शोक-भय से वायु प्रकुपित होता है। इसलिए कामादि ज्वर में वायु का प्रकोप जानना चाहिए। आगन्तुक व्याधि में दोषों का सम्बन्ध ( अनुबन्ध ) रोग उत्पन्न होने के पश्चात् होता है, न कि दोष रोगारम्भक होते हैं जैसा कि सम्प्राप्ति में निरूपित किया गया है। शुक्लानुविद्ध कृष्ण वर्ण को श्याव रंग कहा जाता है। अर्थात् काले रंग में शुक्ल ( सफेद ) रंग का मिल जाना। कुछ लोग श्याम वर्ण अथवा शाक वर्ण भी कहते हैं। विषजन्य ज्वर में रोगी का मुख श्याव वर्ण का हो जाता है। स्थावर विष-भक्षण से अतिसार होता है, क्योंकि स्थावर विष का प्रभाव अधोगामी होता है। ओषधि गन्धज—तीव्र ( तीक्ष्ण ) औषधियों के गन्ध को सूँघने से ज्वर होता है। सुश्रुत ने 'पुष्पेभ्यो गन्धरजसी' श्लोक द्वारा जिस तृणपुष्पज्वर का उल्लेख किया है, उस ज्वर का अन्तर्भाव इसी में करना चाहिए। प्रिय कामिनी ( स्त्री ) आदि के न मिलने से कामज्वर होता है। इससे चित्तविभ्रंश अर्थात् भ्रमादि हो जाता है। जैसा कि आचार्य वाग्भट्ट ने कहा है—काम ज्वर में रोगी को भ्रम, अरुचि एवं दाह होता है तथा लज्जा, निद्रा, बुद्धि एवं धैर्य का नष्ट हो जाता है (अ०हृ०नि०२)। भय से पैदा होने वाले ज्वर में कम्प होता है, इसी तरह शोक एवं क्रोधजन्य ज्वर में भी रोगी को कम्प होता है। शोक से प्रलाप भी होता है, इसीलिए 'शोकाच्च प्रलापः' ऐसा सम्बन्ध कर लेना चाहिये। शोकज्वर में प्रलाप का मूल कारण वायु होता है, वायु ही प्रकुपित होकर पित्त को कुपित कर देता है, जिससे रोगी प्रलाप करता है। इनका विशेष निश्चय तो निदान से किया जाता है, क्योंकि निदान भी लक्षण होता है। कहा गया है—काम, शोक एवं भय से वायु, क्रोध से पित्त और तीनों ही दोष भूताभिषङ्ग से कुपित हो जाते हैं ( च०चि० ३ )।

अब यहाँ प्रश्न किया है कि 'क्रोधात् पित्तम्' अर्थात् क्रोध से पित्त प्रकुपित होता है, तो क्रोधज ज्वर में कम्प क्यों होता है ? कम्प तो वायु का कार्य है ? इसका उत्तर दिया है कि 'एकः प्रकुपितः दोषः सर्वानेव प्रकोपयेत्' अर्थात् प्रकुपित हुआ एक दोष शेष अन्य दोषों को भी प्रकुपित कर देता है। इस कथन से प्रकुपित पित्त

द्वारा वायु के प्रकोप से कम्प होता है—ऐसा समझना चाहिए। अथवा क्रुद्ध व्यक्ति कम्पमान ( काँपता हुआ ) दिखाई देता है, यह चक्षु इन्द्रिय से प्राप्त प्रत्यक्ष प्रमाण है, ऐसा आचार्य जेज्जट का कथन है। अथवा क्रोध से पित्त के ही समान वायु का भी प्रकोप होता है, यही ठीक है। जैसा कि विदेह ने कहा है—क्रोध एवं शोक दोनों ही वात, रक्त एवं पित्त के प्रकोपक है। 'कोपाच्च' यहाँ चकार से शिरोरुक् ( शिरःशूल ) का समुच्चय करना समझना चाहिए। जैसा कि वाग्भट्ट ने कहा है—क्रोध से कम्प एवं सिर में पीड़ा होती है तथा भय एवं शोक से प्रलाप होता है। ( अ०हृ० नि० १ )। भयादिजन्य ज्वर मन से पैदा होने के कारण एक ही प्रकार होते हुए भी हेतु (कारण) भेद से उनको भिन्न-भिन्न कहा गया है और हेतुभेद से इनका अलग-अलग उल्लेख हेतुविपरीतचिकित्सा की दृष्टि से किया गया है।

अभिचार-अभिशाप आदि से होने वाले ज्वर में चकार से दाह आदि को समझना चाहिए। जैसा कि हारीतमतावलम्बी वाग्भट्ट ने कहा है—अभिचारजन्य ज्वर में जिसके नाम से मारण, मोहन एवं उच्चाटन आदि मन्त्रों द्वारा हवन किया जाता है उसका प्रथम मन सन्तप्त होता है, ग्लानि एवं क्लेश का अनुभव होता है, तत्पश्चात् शरीर में सन्ताप ज्वर हो जाता है। साथ में विस्फोट, तृष्णा, भ्रम, दाह तथा मूर्च्छा उत्पन्न हो जाती है और प्रतिदिन ज्वर बढ़ता जाता है ( अ०हृ०नि० २।४४-१, ४५ )।

भूत शब्द से उन्मादनिदान में बताये गये भूत-प्रेत-यक्ष आदि ग्रहों का अभिषङ्ग ( सम्बन्ध ) समझना चाहिये। उद्वेग चित्त की उद्विग्नता को कहते हैं।

आगन्तुक ज्वर में दोषानुबन्धता

**कामशोकभयाद्वायुः क्रोधात्पित्तं त्रयो मलाः ॥ ३० ॥**
**भूताभिषङ्गात् कुप्यन्ति भूतसामान्यलक्षणाः।**

( च०चि० ३।११५-३, ११६-१)

काम, शोक तथा भय से वायु का तथा क्रोध—से पित्त का प्रकोप होता है। भूताभिषङ्ग से तीनों दोष प्रकुपित हो जाते हैं, किन्तु भूतजन्य ज्वर में भूतों के विशेष लक्षण ( हास्यादि ) मिलते हैं।

आगन्तुज्वरेष्वपि प्रतिनियतदोषानुबन्धदर्शनार्थमाह—कामशोकेत्यादि। त्रयो मला भूताभिषङ्गात् कुप्यन्तीति भूतप्रभावात्। यच्च चरकेण निदानस्थाने 'अभिषङ्गजः पुनर्वातपित्ताभ्याम्' ( च. नि. १।३० ) इत्युक्तं, तत् प्रायिकं मन्तव्यमिति जेज्जटः। चक्रस्त्वाह—'अभिषङ्गज इत्यनेन कामाद्यभिषङ्गज उच्यते, नतु भूताभिषङ्गजः' इति। भूतसामान्यलक्षणा इति यस्य भूतस्य देवग्रहादेरभिषङ्गात् कुप्यन्ति तस्य यल्लक्षणं रोदनादि तेन सह

सामान्यं लक्षणं येषां ते तथा, इति व्याचक्षते जेज्जटादयः; दोषलक्षणानि भूतलक्षणानि च भवन्तीत्यर्थः ॥ ३० ॥

सरोज व्याख्या—आगन्तुक ज्वर में प्रारम्भ में दोष के कारण न होने पर भी बाद में इनमें भी नियत रूप से दोषानुबन्ध हो जाता है। जैसाकि कहा गया है—काम-शोक इत्यादि। वात-पित्त-कफ ये तीनों दोष भूताभिषङ्ग से कुपित हो जाते हैं। अर्थात् भूत के प्रभाव से तीनों दोष कुपित होते हैं। महर्षि चरक ने निदान स्थान में कहा है- -अभिषङ्गज ज्वर वात-पित्त के प्रकोप से होता है। जेज्जट के मत से चरकोक्त उपर्युक्त कथन को प्रायिक (अपवाद) समझना चाहिए। आचार्य चक्रपाणि के मत से अभिषङ्गज शब्द से काम-शोक-भयादि के अभिषङ्ग से होने वाला ज्वर मानना चाहिए, न कि भूताभिषङ्ग। भूतसामान्यलक्षण—जिस-जिस भूत अथवा देव-ग्रह-आदि के अभिषङ्ग से यह दोष कुपित होता है, उस ग्रह का रोदन आदि जो लक्षण होता है, उस लक्षण के समान इन दोषों के लक्षण हो जाते हैं। ऐसा जेज्जट आदि का मत है। अर्थात् दोषलक्षण और भूतलक्षण एक समान हो जाते हैं ॥

विषमज्वर की सम्प्राप्ति

**दोषोऽल्पोऽहितसंभूतो ज्वरोत्सृष्टस्य वा पुनः ॥ ३१ ॥**
**धातुमन्यतमं प्राप्य करोति विषमज्वरम्।**

(सु. उ. ३९-६६)

ज्वर के निवृत्त हो जाने पर अथवा आरम्भ से भी मनुष्य में अल्प (निर्बल) वातादि दोष मिथ्या अहार-विहार के सेवन से पुनः बढ़कर रस रक्तादि धातुओं में से किसी धातु में जाकर 'विषम ज्वर' को उत्पन्न करताहै। विषम ज्वर पाँच प्रकार का होता है—(१) सन्तत, (२) सतत, (३) अन्येद्युष्क, (४) तृतीयक और (५) चतुर्थक।

अथ विषमज्वरसंप्राप्तिमाह—दोषोऽल्प इत्यादि। अल्प इत्यनेनाबलत्वात् कालविशेषमवाप्य लब्धबलो ज्वरयति, यस्तु बलवान् स नित्यज्वरमेव करोति। अहितसंभूत इति अहिताहाराचारादिसंभूतो वृद्धः। ज्वरोत्सृष्टस्य सहसा निवृत्तज्वरस्य। वाशब्देन प्रथमतोऽपि विषमज्वरो भवतीति दर्शयति। यदुक्तम्—'आरम्भाद्विषमो यस्तु' इत्यादि। धातुमन्यतमं रसरक्तादिकम्। विषमज्वरं तृतीयकादिकम्। विषमज्वरसामान्यलक्षणं च भालुकिना पठितं—'यः स्यादनियतात्कालाच्छीतोष्णाभ्यां तथैव च। वेगतश्चापि विषमो ज्वरः स विषमः स्मृतः' इति ॥ ३१ ॥

सरोज व्याख्या—दोषाऽल्प-शब्द का अभिप्राय यहाँ पर निर्बल दोष से है। वही निर्बल दोष उचितकालविशेष को प्राप्त कर शक्तिशाली होकर ज्वर उत्पन्न

कर देता है । जो दोष बलवान् होता है, वह नित्य ही ज्वर पैदा करता है । अहित-सम्भूत अर्थात् अहित ( मिथ्या ) आहार-विहार से पैदा होकर वृद्ध । ज्वरोत्सृष्टस्य अर्थात् सहसा निवृत्त ज्वर का । 'वा' शब्द का अभिप्राय है कि किसी प्रकार का ज्वर हुए बिना आरम्भ से भी ( स्वतन्त्र रूप से भी ) विषम होता है । जैसाकि कहा गया है—'आरम्भाद् विषमो यस्तु' अर्थात् जो ज्वर आरम्भ से विषम हो । धातु-मन्यतमम्—रस-रक्तादि में से किसी एक धातु में जाकर । विषमज्वरम्-अर्थात् तृतीयक आदि ज्वर को उत्पन्न करता है । विषमज्वर का सामान्य लक्षण भालुकि ने बताया है—

य: स्यादनियतात्कालाच्छीतोष्णाभ्यां तथैव च ।
वेगतश्चापि विषमो ज्वरः स विषमः स्मृतः ॥

अर्थात् जो ज्वर अनियमित रूप से सर्दी या गर्मी लगने के बाद अनियमित काल में होता हो तथा जिसका वेग भी विषम हो, उसे विषम ज्वर कहा जाता है ।

## विषम ज्वर की सम्प्राप्ति

१. दोषज

अल्पदोष ( निर्बल दोष )
या
ज्वरोत्सृष्ट ( सहसा निवृत्तज्वर का अवशिष्ट दोष )
या
किसी प्रकार का ज्वर हुए बिना भी स्वतंत्र रूपेण

+ अहितसम्भूत ( मिथ्या आहार-विहार )
|
दोष प्रकोप
|
रस-रक्तादि धातुओं में अवस्थान
|
विषम ज्वर

२. आगन्तुज

भूताभिषङ्ग[1]
|
विषमज्वर

---

१ (क) परो हेतुः स्वभावो वा विषमे कैश्चिदीरितः ।
आगन्तुश्चानुबन्धो हि प्रायशो विषमे ज्वरे ॥ ( सु०उ० ३९।५६ )

(ख) परोभूतादिः हेतुः कारणं, स्वभावो वेति विषम ज्वरे हेतुरित्यर्थः ।
( सु०उ० ३६।५६ पर डल्हण टीका )

(ग) केचिद् भूताभिषङ्गोत्थं ब्रुवते विषम ज्वरम् । ( सु०उ० ३६।६८ )

(घ) भूताभिषङ्ग से जीवाणु एवं मलेरियल पैरासाइट्स समझा जा सकता है ।

सन्ततादिज्वर के प्रतिनियत दृश्य धातु

**सन्ततं रसरक्तस्थः, सोऽन्येद्युः पिशिताश्रितः ॥ ३२ ॥**
**मेदोगतस्तृतीयेऽह्नि त्वस्थिमज्जगतः पुनः ।**
**कुर्याच्चतुर्थकं घोरमन्तकं रोगसंकरम् ॥ ३३ ॥**

( सु. उ. ३९।६७-६८ )

रस धातु में स्थित दोष सन्तत ज्वर को, रक्त धातु में स्थित दोष सतत ज्वर को, मांस में स्थित दोष अन्येद्युः ज्वर को, मेदोगत दोष तृतीयक ज्वर एवं अस्थि तथा मज्जा गत स्थित दोष चतुर्थक ज्वर को उत्पन्न करता है। इन पाँचों में चतुर्थक ज्वर कष्टकारक, यमराज के समान एवं अनेक उपद्रवों से युक्त होता है ॥ ३३ ॥

सन्ततादिज्वराणां प्रतिनियतदूष्यान् धातूनाह—सन्ततमित्यादि । सन्ततशब्दः सततस्योपलक्षणः । तेनैतदुक्तं भवति—रसस्थः सन्ततं, रक्तस्थः सततकमिति; यदुक्तं चरके—रक्तधात्वाश्रयः प्रायो दोषः सततकं ज्वरम्' ( च. चि. अ. ३ ) इति । ( प्रायोग्रहणात् सततको रक्तव्यतिरिक्तं रसधातुमाश्रयते । ) रसग्रहणं चात्र विशेषपरम्; सर्वज्वरेषु रसस्यावश्यदूष्यत्वात् । अन्ये तु सततग्रहणार्थं 'सन्ततौ रसरक्तस्थौ'--इति पठन्ति । तन्नातियुक्तम्; अत्र हि सन्ततसततशब्दौ संज्ञापरौ, न तु सातत्यवचनौ; तेन सन्ततशब्देन सततकस्यानभिधानात् कथमेकशेष इति दोषः । अन्येद्युरिति अन्येद्युष्कम् । घोरं दुःसहम् । अन्तकं यममिव, मारकत्वात् । रोगसंकरम् अनेकरोगसंकुलम् ॥ ३२–३३ ॥

सरोज व्याख्या—यहाँ सन्ततादि ज्वर के प्रतिनियत दूष्य धातुओं का उल्लेख किया गया है, अर्थात् दोष किस धातु में स्थित होकर कौन-सा ज्वर उत्पन्न करता है। इस श्लोक में सन्तत शब्द से सतत को भी समझना चाहिए। (सन्तत Continuous or Remittent Fever ) रसगत एवं सतत ( Double Rise of Temperature ) रक्त में स्थित होता है। जैसा कि चरक ने कहा है—रक्त धातु में स्थित दोष प्रायः सतत ज्वर को उत्पन्न करता है ( च० चि० ३ )। प्रायः शब्द से स्पष्ट है कि सतत ज्वर रक्त के अतिरिक्त रस धातु में भी आश्रित रहता है। रस शब्द के ग्रहण करने से यहाँ पर सन्तत ज्वर का रस धातु में स्थित होने का विशेष रूप से ज्ञान होता है, वैसे तो सभी ज्वरों में रस अवश्य दूषित होता है। अन्य लोग सतत ज्वर को ग्रहण करने के लिये 'सन्ततौ रसरक्तस्थौ' ऐसा कहते हैं। लेकिन यह ठीक नहीं मालूम पड़ता; क्योंकि यहाँ पर सन्तत और सतत ये दोनों शब्द संज्ञावाचक है। न कि सातत्य (निरन्तर) वाचक। ऐसा होने से सन्तत शब्द

से सततक शब्द का अनभिधान ( अकथन ) होने से एकशेष कैसे हुआ ? यह दोष आया। अतः सन्तत शब्द से सतत का अभिधान नहीं हो सकता।

अन्येद्युः अर्थात अन्येद्युष्क ज्वर (Quotidian-Intermittent Fever)। घोर अर्थात् दुःसह ( कष्टकारक )। अन्तकम्—यमराज के समान मारने वाला। रोगसङ्करम्—प्रभूत रोगोत्पादक।

### दोषों की धातुगत स्थिति, ज्वर के वेग ( बल ) एवं काल के अनुसार विषम ज्वर

| ज्वर नाम | धातुगत स्थिति | ज्वर वेग एवं काल | ज्वर की प्रकृति |
|---|---|---|---|
| १. सन्तत | रस | सात दिन—वात<br>दश दिन—पित्त<br>बारह दिन—कफ | निरन्तर<br>Continuous<br>or Remittent |
| २. सतत | रक्त | रात-दिन में दो बार | चौबीस घण्टा में दो बार<br>Double Quotidian |
| ३. अन्येद्युष्क | मांस | रात-दिन में एक बार | चौबीस घण्टा में एक बार<br>Quotidian |
| ४. तृतीय ज्वर | मेद | प्रत्येक तीसरे दिन | Tertian |
| ५. चतुर्थक | अस्थि एवं मज्जा | प्रत्येक चौथे दिन | Quartan |
| ६. चतुर्थक-विपर्यय | अस्थि एवं मज्जा | मध्य में दो दिन | एक दिन छोड़कर निरन्तर दो दिन ज्वर<br>Double Quartan |

### सन्तत ज्वर की सम्प्राप्ति

( स्रोतोभिर्विसृता दोषा गुरवो रसवाहिभिः।
सर्वदेहानुगाः स्तब्धा ज्वरं कुर्वन्ति सन्ततम्[1] ॥ )

( च० चि० ३।५३-२, ५४-१ )

बढ़े हुए वातादि दोष रसवाही स्रोतों द्वारा सम्पूर्ण शरीर में फैल जाते हैं, तो सम्पूर्ण शरीर जकड़ जाता है, जिससे सन्तत ज्वर उत्पन्न हो जाता है।

### सन्ततादि ज्वर का लक्षण

**सप्ताहं वा दशाहं वा द्वादशाहमथापि वा।**
**सन्तत्या योऽविसर्गी स्यात् सन्ततः स निगद्यते ॥ ३४ ॥**

---

१. यह पाठ कुछ ग्रन्थों में नहीं मिलता है।

अहोरात्रे सततको द्वौ कालावनुवर्तते।
अन्येद्युष्कस्त्वहोरात्र एककालं प्रवर्त्तते ॥ ३५ ॥
तृतीयकस्तृतीयेऽह्नि चतुर्थेऽह्नि चतुर्थकः।
( सु. उ. ३९।६९, ७१-१ )

जो ज्वर सात, दस एवं बारह दिन तक निरन्तर बना रहे, उसे 'सन्तत ज्वर' कहते हैं।

जो ज्वर दिन-रात में दो-बार आता हो, उसे 'सतत ज्वर' कहते हैं।

जो ज्वर दिन-रात में एक बार आता हो, उसे 'अन्येद्युष्क ज्वर' कहा जाता है।

जो ज्वर तीसरे दिन ( एक दिन बीच में छोड़कर ) आता हो, उसे 'तृतीयक ज्वर' कहते हैं।

जो ज्वर चौथे दिन आता है, उसे चतुर्थक ज्वर कहा जाता है।

अथैषां लक्षणान्याह--सप्ताहमित्यादि। एते विकल्पा यथाक्रमं वातपित्त-कफोल्वणत्वेन ज्ञेयाः। यथोक्तं--'पित्तकफानिलवृद्धया दशदिवसद्वादशाह-सप्ताहात्। हन्ति विमुञ्चति वाशु त्रिदोषजो धातुमलपाकात्'--इति। अयं च सन्ततस्त्रिदोषज एव द्वादशाश्रयत्वेन। यदुक्तं चरकेण--'यथा धातूंस्तथा मूत्रं पुरीषं चानिलादयः। युगपच्चानुपद्यन्ते नियमात् सन्तते ज्वरे' ( च. चि. ३।५६ )--इति। सन्तत्या अविच्छेदेन सप्ताहादीन् व्याप्य अविसर्गी अपरि-त्यागी, अत्यन्तसंयोगे द्वितीया। ननु, यद्येवं कथमस्य विषमज्वरे पाठः? मुक्तानुबन्धित्वं विषमत्वं, तच्चात्र नास्ति? नैवम्, अस्यापि तथाभावात्। तथा च तल्लक्षणे चरकः—विसर्गं द्वादशे कृत्वा दिवसेऽव्यक्तलक्षणः। दुर्ल-भोपशमः कालं दीर्घमप्यनुवर्त्तते' ( च. चि. ३।५९ )—इति। यत्तूक्तं खरनादेन, ज्वराः पञ्च मयोक्ता ये पूर्वं सन्ततकादयः। चत्वारः सन्ततं हित्वा ज्ञेयास्ते विषमज्वराः'—इति; तत् सन्तते मुक्तानुबन्धित्वस्यैकदाभावि-त्वेनाल्पत्वान्न तद्व्यपदेशः; एकतण्डुलाभ्यवहारेऽनशनशब्दस्य व्यपदेशवत्। न हि तृतीयकादिवदावृत्त्या मुक्तानुबन्धित्वमस्येत्यभिप्रायेण द्रष्टव्यम्। अथवा विषमज्वरोल्लेखेन या चिकित्सोक्ता सा सन्ततवर्जं सततादिषु कार्येति प्रतिपादनार्थम्। हरिचन्द्रेणापि किल 'कर्म साधारणं जह्यात्तृती-यकचतुर्थकौ'—इति ( चि. च. अ. ३ ) चरकवाचनाद्विषमज्वरोक्तचिकित्सा तृतीयकचतुर्थकयोरेव; अन्येषु दोषप्रत्यनीकचिकित्सा कार्येत्यभिव्याख्या-तम्। अस्यां हरिचन्द्रव्याख्यायां कर्म साधारणं सर्वत्रैव विषमज्वरे कार्यं, विशेषेण तृतीयकचतुर्थकयोरिति द्रष्टव्यम्; अन्यथोक्ततन्त्रान्तरविरोधः। 'अहोरात्रे सततको द्वौ कालावनुवर्तत' इति अह्नि द्वौ कालौ रात्रौ द्वौ कालौ

वा; अह्नि एककालं रात्रावेककालमेवं वा, द्वौ कालौ--इति शानदेवः, नियमानभिधानात्तथा दर्शनाच्च । अनुवर्तते वेगं करोति। तृतीयेऽह्नि तृतीयक इति वेगदिनापेक्षया तृतीयेऽह्नि यो भवति स तृतीयको भवति, एवं चतुर्थकेऽपि वाच्यम् ॥ ३४-३५ ॥

सरोज व्याख्या—सप्ताह, दशाह और द्वादशाह का यह विकल्प क्रमशः वात-पित्त एवं कफ की उल्वणता की दृष्टि से बताया गया है। जैसा कि कहा भी है कि पित्त की वृद्धि से दस दिन, कफ की वृद्धि से बारह दिन एवं वायु की वृद्धि से सात दिन के अन्दर त्रिदोष ज्वर धातुपाक हो जाने पर रोगी को मार डालता है और दोषपाक हो जाने पर रोगी मुक्त होकर स्वस्थ हो जाता है। यह सन्तत ज्वर भी त्रिदोषज होता है, क्योंकि इसके बारह आश्रय ( अधिष्ठान ) होते हैं। जैसा कि चरक ने कहा है--

यथा धातूँस्तथा मूत्रं पुरीषं चानिलादयः ।
युगपच्चानुपद्यन्ते नियमात्सन्तते ज्वरे ॥ ( च० चि० ३।५६-२, ५७-१ )

अर्थात् संतत ज्वर में वातादि तीनों दोष एक ही समय में रस-रक्तादि सातों धातुओं को तथा मल एवं मूत्र को निश्चित रूप से दूषित करते हैं। इस प्रकार तीन दोष, सात धातु एवं दो मल-मूत्र सब मिलकर संख्या में बारह हो जाते हैं। इस ज्वर में बारहों ही नियमित रूप से दूषित हो जाते हैं, इसलिए इसे त्रिदोषज कहा गया है। सन्तत्या अर्थात् निरन्तर बिना किसी विच्छेद के ( बिना उतरे ) ज्वर सात, दस अथवा बारह दिन की अवधि के पश्चात् उतरे, इसी से इस ज्वर को अविसर्गी-अपरित्यागी ( अत्यागशील ) अर्थात् जो छोड़ने वाला न हो, कहा गया है। सप्ताहं, दशाहं, द्वादशाहं यहाँ अत्यन्त संयोग में द्वितीया बिभक्ति का प्रयोग है।

अब यहाँ शंका उत्पन्न होती है कि यदि सन्तत ज्वर लगातार बना रहता है, तो इसको विषम ज्वर के अन्तर्गत क्यों कहा गया है ? क्योंकि विषम ज्वर बीच-बीच में उतर कर पुनः होता है। विषम ज्वर का लक्षण है—मुक्तानुबन्धित्वं विषमत्वम् अर्थात् जो ज्वर छोड़कर पुनः हो जाय। यह लक्षण सन्तत ज्वर में नहीं मिलता क्योंकि वह निरन्तर बना रहता है। इस पर कहते हैं कि सन्तत ज्वर में भी मुक्तानु-बन्धित ( छोड़कर होना ) की प्रवृत्ति मिलती है। क्योंकि चरक ने कहा है--

विसर्गं द्वादशे कृत्वा दिवसेऽव्यक्तलक्षणः ।
दुर्लभोपशमः कालं दीर्घमप्यनुवर्त्तते ॥ ( च. चि. ३।५९-२, ६०-१ )

अर्थात् सन्तत ज्वर बारहवें दिन अव्यक्त रूप में ( बहुत थोड़े समय के लिये ) उतरता है, पुनः चढ़कर दीर्घकाल तक बना रहता है। ऐसी अवस्था में इसका

